# जटामणि व्याख्यानम्

ओम् ननुजटाध्ययनाधिकारिकः इत्युक्ते अधिकार्युच्यते प्रातिशाख्यादिशास्त्रज्ञ इति वचनेन प्रातिशाख्यादिशास्त्रज्ञः आदिशब्देन नवशिक्षा पारीणः । व्याकरणादिशास्त्रज्ञश्चेत्यर्थः सूक्ष्मबुद्धिस्समर्थः । उच्चारणसमर्थः सभाकम्परहितः यः पुरुषः सजटां वक्तुमर्हति ।१।

ननु श्रौतस्मार्त्तेषु संहिताया एव उपयोगित्वात् अध्येतव्यापदाध्ययना भावे संहितावसानज्ञानाभावात् प्रातिशाख्ये अथादावुत्तरे विभाग इत्यत्र पदं प्रतिलक्षणस्य विद्यमानत्वाच्च पदमप्यध्येतव्यम् । क्रमाध्ययनसंपन्नो देवत्वमधिगच्छतीति क्रमाध्ययने फलस्य प्रतियमानत्वात् क्रमाद्वाभ्यामनुक्रम्यति क्रमाध्ययनं प्रतिलक्षणस्य विद्यमानत्वात् क्रमो ध्येतव्यः । तथा च जटाध्ययने प्रमाणाभावात् कथं जटाध्ययनमिति शंकाया जटायां प्रमाणमेवोच्यते तस्यां प्रमाणमित्यादिना । तस्या जटायां प्रमाणं प्रातिशाख्ये प्रथमप्रश्ने रेफा देशे विसर्जनीयाधिकारे इति परोपि सूत्रस्थापि शब्दान्न धामेत्यार्षशब्दतश्च विज्ञेयमित्यन्वयः इति परोपिसूत्रस्थापिशब्दः आवृत्परत्वमन्वादिशति । असावावृत्परो विसर्जनीयः इति परश्चेत् रेफमापद्यते । अत्र संहितायामुदाहरणाभावः जटायामेवोदाहरणम् । यथा । इति श्रुतश्श्रुतरितीति श्रुतः । आवृत्पर इति किम् । प्रहारावयोर्वैश्रित इत्यत्र आवृत् परत्वाभावात् तन्माभूदिति तथा चेदं सूत्रं

जटालक्षणं तथा च जटाध्ययने सन्धिः किञ्च न धामेत्यार्षशब्दत इत्यतः आर्षग्रहणात्पौरुषमाक्षिपति । तथा च न संहिता व्यतिरिक्तं पदक्रमजटादिकं पौरुषमिति व्यवहारः किञ्च हवारभारादिसूत्रे अबिभर्ग्रहणस्य जटायामेवोदाहरणं पदग्रहणस्यापि जटायामेवोदाहरणम् ।
यथा । अबिभस्तन्तमबिभरबिभस्तम् । मरुतां पितः पितर्म्मरुताम्मरुतां पितः । तथा च जटाध्ययने प्रमाणसन्धिः ।३।
ननु जटाध्ययनस्य प्रमाणमुक्तं जटा कीदृक् भूतेति शंकायामुत्तरमाह जटायाः पञ्चधा सन्धिरिति पञ्चसन्धिप्रकारः । भक्षा । आ । आभक्ष । भक्षभक्ष । भक्षा । आद्यन्तसन्धिः आर्षसंज्ञा अन्ये सन्धयोऽनार्षकाः ।४।
ननु कीदृक् भूता जटेत्युक्ते पञ्चसन्धिरेव जटा इत्युक्ता तथा च त्रिक्रमस्थलेषु अष्टसन्धेर्विद्यमानत्वात् कथमिदमिति शंकायामाह

त्रिक्रमेष्विति

त्रिक्रमेषु आद्यन्तयोर्द्वौ द्वौ ताः आर्षसंज्ञा अन्ये सन्धयः अनार्षकाः । यथा । उद्गाता ।
आरोहति । रोहति रोहति । रोहत्या । ओद्गाता । उद्गातोद्गाता । उद्गाता । आरोहति । ऋचा । आसादयति । सादयति सादयति । सादयित्या । आर्च्चा । ऋचर्च्चा । ऋचा । आसादयति । ।५।
जटाकीदृक् भूतेति शंकायां वचनान्तरमप्याह पदद्वयमिति । पदद्वयमनुक्रम्य अनुक्रमः आर्षः

पुनश्च व्युत्क्रमः विलोमः उत्क्रमः अनुलोमः । प्रथमं पदद्वयमनुक्रम्य पुनश्च व्युत्क्रम्य पुनश्च व्युत्क्रम्य प्रातिशाख्यस्वरविधिमनतिक्रम्य स्वरसहितं प्रयुञ्ज्यात् । यथा
वदन्त्यकूटयाकूटया वदन्ति वदन्त्यकूटया ।६।

न्यायादिति ।

न्यायतः प्रमाणतः दृष्टान्तत्वेन यत्प्रतीयते तद्विलोमे जटाकाले तादृशसन्धिरभिधीयत इत्यर्थः ।७।

यत्रार्ष इति ।

आर्षे उत्भूतसन्धिर्न विवति अनुद्भूतसन्धिर्जटायामुद्भ वेद्यदि सः अरुणब्राह्मणे दृष्टान्तत्वेनोच्यत इत्यर्थः । यथा । नृषदेवड्वरणृषदे नृषदेवट् ।८।

जटोच्चारणप्रकारमाह ।

सकृदादिरिति । आदिपदं सकृत् द्वितीयं द्विरावृत्तिः पुनश्चादिपदं सकृत् अनन्तरम् क्रमवत्सन्धितः जटाबुधैः प्रोच्यते । यथा । उपोपेदिदुपोपोपेत् ।९।

त्रिक्रमस्थले जटाप्रकारमाह ।

त्रिक्रमस्येति । त्रिक्रमस्थले आदौ क्रममुक्त्वा अनन्तरमन्तपदं पुनरुक्तन्तदनन्तरं मद्ध्यमपदन्तदनन्तरमादिपदं पुनश्चादिपदन्तदनन्तरं मद् ध्यमपदन्तदनन्तरमन्तपदञ्चोक्तं सो यं त्रिक्रमजटा ज्ञातव्या । यथा । भूत्वा हरद हरत् भूत्वा भूत्वा हरत् ।१०।

पदद्वयम् षडावृत्तिर्भवति त्रिक्रमस्थले तथानवपदं वदेत् ।१३।

स्वरवर्णाभ्यामभेदः पदद्वये यदि तत्र जटा विचक्षणैः क्रमोच्चारण एव ह्युक्ताः
। यथा । अदन्त्यदन्ति । नमो नमः । स्वरभेद इति किम् । तरति तरति तरति तरति तरति तरति । वर्णभेद इति किम् । असूर्त्तासूर्त्तासूर्त्तासूर्त्तासूर्त्तासूर्त् ता ।१४।

लोपालोपषत्वेति ।

लोपश्च अलोपश्च षत्वश्च णत्वश्च वत्वादेशश्चागमाश्चादिशब्देन विसर्जनीयादयो गृह्यन्ते येषु संहितायां यथा प्राप्तिः जटायान्तद्वदेवेत्यर्थः । यथा । सोमप्रतिप्रतिषोमसोमप्रति । एनमिन्द्र इन्द्र एणमेनमिन्द्रः । अनुष्टुभापरि पर्यनुष्टुभानुष्टुभापरि । अश्व ऋषभ ऋषभो अश्वोऽश्व ऋषभः । अंगिरोभ्यस्स्वाहा स्वाहांगिरोभ्यो अंगिरोभ्यस्स्वाहा । अस्त्ववरेभ्योऽवरेभ्यो अस्त्वस्त्ववरेभ्यः आदिशब्देन यथा । स्यप्रप्रस्यस्यप्र । न ह्यत्यनुष्टुबनुष्टुम्नह्यति नह्यत्यनुष्टुप् ।१५।

यानग्नय इति

अन्वतप्यन्तेत्यत्र पूर्वं इवर्णोकारौ यवकाराविति यणादेशे कृते ततः अग्नय ग्रहणस्य उदाहरणाभावात् पुनश्च लोपप्राप्त्यर्थं अग्नय ग्रहणन्नियमार्त्थम् । यथा । अग्नयोऽन्वतप्यन्तान्वतप्यन्ताग्नयोऽग्नयोऽन्वतप्यन्त ।१६।

ग्रहणन्त्वेकमुद्दिश्य एकं पदमुद्दिश्य गृह्यते यदि तदन्यत्र न ग्राह्यमिति जटाभिमतैरुक्तम् । एतद्वचनमन्वतप्यन्ते त्येतावन्मात्रस्यैवविषयन् ।१७।

तथैवाश्वाजनीत्यत्र अश्वाजनीत्यत्र अन्वतप्यन्ते त्वत्र यथा तथैवेत्यर्थः । आकारश्रुतौ प्राप्तौ सत्यां एकादेशे कृते ततः तस्माद्विलोमे जटाकाले लोप एव । यथा । अश्वाजनि प्रचेतसः प्रचेतसोऽश्वाजन्यश्वाजनि प्रचेतसः । अत्र शीक्षाकाराः । अश्वाश्रुतिस्तु यत्प्रोक्तं पदे खण्डे च यं विदुः । समासेनैव विज्ञेयो दृष्ट्वाश्वाजनि कथ्यति । इति समानपदे अलोप एवेति । अश्वाजनिप्रचेतसः प्रचेतसोऽश्वाजन्यश्वाजनि प्रचेतसः । इति पाठान्तरम् ।१८।

तथैयातामिति ।

अश्वाजनीत्यत्र यथा तथैवेत्यर्थः । एयातां ब्राह्मणायेत्यत्र तत्र पूर्वमिति त्यायेन दीर्घं स्मानाक्षरे सवर्णेति एकादेशे कृते तदनन्तरं इवर्णपर एकारमितीत्येकारमाप्नोति । यथा । एयातां ब्राह्मणाय ब्राह्मणायैयातामेयातां ब्राह्मणाय । पुनरेत्येत्य पुनः पुनरेत्य । अत्र शिक्षाकाराः । एयातां ब्राह्मणायात्र त्वेकारस्सन्धितो भवेत् । परवर्णे प्रसक्तं चेत् गणनाथो निषिद्ध्यते । इति एयातां ब्राह्मणायेत्यत्र एकार एव । एयातां ब्राह्मणाय ब्राह्मणायैयातामेयातां ब्राह्मणाय । एतद्वचनस्य बह्वादृतत्वाभावात् अनंगीकार एव एतद्वचनम् ।१९।

छत्वे प्राप्ते ।

श्नथद्वृत्रमित्यत्र जटायां तकारश्शकारं शचछपर इति छत्वे प्राप्ते स्पर्शपूर्वश्शकारश्छकारमिति छत्वप्राप्तिः जटाकाले शपूर्वत्वाभावात् आकारन्नापद्यते । प्राकृतनकार इत्यर्थः । श्नथद्वृत्रं वृत्रः

श्रथच्छ्नथद्धूत्रम् ।२०।
श्रनुशब्दे ह्युकारस्य । श्रन्वित्यस्य पदस्य इवर्णोकारौ यवकाराविति उकारस्य वकारे वैकृते स्थले जटायान्नैव लोपस्यात् श्रकारस्येति निर्णयः ।
श्रनुगावोगावो श्रन्वनुगावः ।२१।
श्रनुशब्दे ह्युकारस्य पूर्वश्लोकवत् वकारे वैकृते सति संहितायां यथा लोपः तथा लोप एवस्यात् ।
गावोऽन्वनुगावो गावोऽनु ।२२।
ह्रस्वभाजां तु । ह्रस्वभाजां पदानां सर्वेषां पूर्वपौरुषे ह्रस्वता विज्ञेयः । ह्रस्वभाक् शब्देन श्रथादावुत्तरे विभाग इत्यादि । जटाकाले उत्तरपौरुषे श्रादावन्ते च दीर्घस्यात् । श्रथ मद्ध्ये ह्रस्व इत्यर्थः । पूर्वपौरुषे यथा । हिष्ठस्थहिहिष्ठ । उत्तरपौरुषे यथा । स्थामयोभुवो मयो भुवस्थस्थामयो भुवः । स्थामयो भुव इत्यत्र जटायां स्थशब्दस्य द्वितीयोच्चारणे तु दीर्घः प्रसज्येत उत्तरपदेन विभागा भावात्तन्माभूदिति त्रिभाष्यरत्नकारेणोक्तन् ।२३।
यस्यार्षे प्रग्रहत्वञ्च । श्रार्षे यस्य प्रग्रहत्वमस्ति श्रनार्षेपि तस्यैव प्रग्रहत्वं भवति । उक्तलक्षणं नाम प्रातिशाख्ये श्रथ प्रग्रहा इत्यारभ्य यदुक्तं तत्प्रकारेणेत्यत्र्थः । पौरुषे विशेषो न भवेत् । यथा । श्रन्तर्भरिष्यन्ती भरिष्यन्ती श्रन्तरन्तर्भरिष्यन्ती । श्रार्षे प्रग्रहत्वमिति किम् । तावब्रूतां सर्वे । श्रास्तान्तेत इत्यत्र श्रार्षनियमप्राप्तिः नैतदिष्टं ।२४।
प्रधानं वा निमित्तीति । प्रधानं कार्यभागिति यावत् । निमित्तं वा यत्रस्थले द्विपदं ग्रहणं यदि तत्र व्युत्क्रमे

जटाकाले द्विपदं सर्वं ग्राह्यमित्यर्थः । क्रमे तत्र एकदेशतः । नोऽग्नयो अग्नयोनो नोऽग्नयः ।२५। पदद्वयनिमित्तं यत् । यत्र यस्मिन् स्थले पदद्वयनिमित्तं यत् तत्र जटा काले एकाभावे सति तत्र तु संहितावत् स्वरमुक्तम् । इन्द्रणो न इन्द्रेन्द्रणः । अत्र संपूर्वाभावेपि भवति ।२६। चादीनामेव । अव्ययानामित्यर्थः । अव्यये परे वो लोपः वकारलोप इत्यर्थः । अक्विप्परे मकारस्य लोपः उत्पूर्वः व्यञ्जनपरस्सकारलोपः स्थास्तन्भोरेवसकारलोप इति व्याकरणशास्त्रेणैवोक्तम् । इन्नुन्विदिन्नु । न्वैवैनुन्वै । त्वैवैतुत्वै । अव्ययपर इति किम् । विदुषो नुनु विदुषो विदुषो नु । वरुणस्तु तुवरुणो वरुणस्तु । वसतुनु नुवसतु वसतु नु । मकारलोपो यथा । प्रत्युष्टं रक्षः । तं षडहानि । सकारलोपो यथा । स्थानादुदुत्थानात् स्थानादुत् । स्थास्तन् । भोरे वेति किम् । स्वायुषोदुत्स्वायुषा स्वायुषोत् । स्यादुदुत् स्यात्स्यादुत् । स्तोममुदुत्स्तोमं स्तोममुत् ।२७। अवग्रहमकारो यः । अवग्रहस्थः यः मकारः संसामित्येवं पूर्वो न लुप्यते साम्म्राज्याय । सम्म्राजोरवः । अवग्रह इति किम् । तोतेरायस्सन्देवीत्यत्र जटायामयं प्रतिषेधो न भवति इति कारेणात्र्थान्तरं सूचयति । रायस्संसंरायो रायस्सं । राज्ञे सं सं राज्ञे राज्ञे सम् । राष्ट्रेण सं सं राष्ट्रेण राष्ट्रेण सम् । प्राज्ञस्सविज्ञेयः अन्यत्र न संभवेदित्यर्थः ।३०।

यो लोपः यकारस्य लोपः स तिष्ठन्ति शब्दपूर्वश्चेत् एकया ग्रहणे यकारलोपो भवति । यथा । तिष्ठन्त्येकैकयैकैकयातिष्ठन्ति तिष्ठन्त्येकैकया । जटाकाले तिष्ठन्ति शब्दविशिष्टाभावेऽपि स्यात् । निमित्तन्नापेक्षते । एकैकया स्तुतया स्तु तयैकैकयै कैकया स्तुतया । इति शब्दविशिष्टे एकमित्यस्मिन् ग्रहणे मकारलोपः । अत्रापि निमित्तं नापेक्षते । जटायां । यथा । एकैकं तस्य तस्यैकैकमेकैकं तस्य ।३१।

पृक्तात् । एकवर्णः पदमपृक्त इति प्रातिशाख्ये यदुक्तं तद्वदपृक्तसंज्ञा अपृक्त इति व्यञ्जनेनासंयुक्त इत्यर्थः । पृक्ते च अपृक्ते च संयोगे दीर्घस्यात् । अवर्णात्परो गुणो भवेत् । यथा । उपातुपातूपातु । उयन्तु यन्तूयन्तु । ऊषुसूषु । ऊनु नूनु । ऊतुतूतु । उवर्णात्परो यथा । उत्वात्ववुत्वा । उहोताहोतवुहोता । तत्तस्मादित्येताभ्यां पूर्वः अपृक्त उकार परोऽपि जटाकाले दीर्घमाप्नुतः । तदूतत्तदु । तस्मादूतस्मात्तस्मादु । एतद्व्यतिरिक्तस्थले वकारागमे यथा स उवुस स उ ।३३।

आयोऽद्ध्वर्यौ क्रतो । पूर्वः अकारः जटाकाले लोपः स्यात् । आर्षे यदि लुप्ते सति । यथा । जनयत्यद्ध्वर्योऽद्ध्वर्यो जनयति जनयत्यद्ध्वर्यो । अद्ध्वर्योऽवेरवेरद्ध्वर्योऽद्ध्वर्योऽवेः । अग्ने दब्धायोदब्धायोग्नेग्नेदब्धायो । अदब्धायोऽशीततनो अशीततनो अदब्धायोऽदब्धायोऽशीततनो । आर्षे लोप इति किम् । घृतवतीमद्ध्वर्यो अद्ध्वर्यो

घृतवतीं घृतवतीमद्ध्वर्यो । अद्ध्वर्योस्त्रुचं स्त्रुचमद्ध्वर्यो अद्ध्वर्योस्त्रुचम् । नान्यथा बुधैरिति आयोऽद्ध्वर्योकृतो इत्येतद्व्यतिरिक्तप्रग्रह इत्यर्त्थः । यथा । अवसातस्तभाने तस्तभाने अवसावसातस्त भाने ।३४।

संहितावत्क्रमो ज्ञेयो जटा च । प्रातिशाख्ये अपि विकृतमिति सूत्रे यदुक्तं तदुक्तं जटाकालेऽपि विकृतश्च आगमश्च लोपश्च विकारागमलोपेष्वित्यर्त्थः जटाकालेऽपि संहितावदित्यर्त्थः । निर्णेनिक्ते नेनिक्तेनिर्णिर्न्नेनिक्ते । निशितायान्निर्न्निशिताया न्निशितायान्निः । आगमो यथा । षडक्षरेण षट्थषट्थषडक्षरेण षडक्षरेण षट् । सुपर्णोऽस्यसि सुपर्णः सुपर्णोऽसि ।३६।

निमित्तीति ।

प्रधानस्य तु । प्रतिषेधे तु निमित्त बलान्न्येनोच्यते इंग्यभेद इति असंख्यानविषय इत्यर्त्थः । विधिर्न्न भवति प्रतिषेधभाक्स्यात् । ।३७।

यथा पुनः कृधिबलात् सत्वविधिर्न्नेष्यते पुनरित्यत्र प्राधान्यात् कृधिरिति निमित्तत्वात् एतद्वचनमनिष्टम् ।३८।

कृद्ध्युत्तरे पुनश्शब्दात् । कृद्ध्युत्तरे सति पुनश्शब्दविसर्जनीयः सत्वमापद्यते नाद्ध्वरञ्चेति सूत्रेण अवग्रहस्थस्यैव पुनश्शब्दविसर्जनीयो निषिद्ध्यते । यथा । कृधि पुनः पुनस्कृधि कृधिपुनः । ननु कृधिशब्दस्यैव सूत्रान्तरनिषेधोऽस्ति कुत्रे त्युक्ते धषवति निषेधस्य विद्यमानत्वादिति

चेन्न । उच्यते । धषवति निषेधस्याद्विश्वतः क्षत्रमत्र च । पदे चेङ्ग्यपदे नित्यन्नाविस्सूत्रे कृधीति च । अस्यार्थः विश्वतः क्षत्रमित्यत्र विसर्जनीयः क्षपरे सत्वं न प्राप्नोति धषवति निषेधात् विश्वत इति ग्रहणस्य कण्ठोक्तत्वेऽपि धषवति निषेधस्य आर्द्धिकत्वेऽपि जटाकाले कण्ठोक्तत्वमप्रयोजकं आविस्सूत्रे कृधि शब्दस्यैवमपि धषवति निषेधो न स्यात् । तथा च कृधि पुनरित्यत्र धषवति निषेधो न ।३९।

सत्वे कारपूर्वस्य । सत्वविधौ अकारपूर्वत्वरूपं दीर्घस्याप्युपलक्षणं भवति । पतिः पृथिव्याः पृथिव्यास्पतिष्पतिः पृथिव्याः । किञ्च । ग्नास्पतिस्तत्र दर्शनात् । नराशंसो ग्नास्पतिर्नो अव्यात् ।४०। उदथापरश्चेत्यत्रदीर्घग्रहणं ह्रस्वस्याप्युपलक्षणम् । तथा परिवाप्रपर इत्यत्र प्रतिह्रस्वग्रहणं दीर्घस्याप्युपलक्षणं भवतीति भाष्यकारेणोक्तत्वात् । यथा । विद्वानथाथविद्वान् विद्वानथ । प्राञ्चौनिर्णिष्प्राञ्चौ प्राञ्चौ निः । आत्मनापरानिष्प्र । बहिः प्राणो वै ।४३।

यत्र यस्मिन् स्थले । मधुमतीभिस्सृज्यद्ध्वमित्यत्र पौरुषे षत्वं न भवति । ऋकाररेफवतीति निषेधाच्च । महि तुविदिर्जपत इति सामान्याः । पौरुषे कण्ठोक्तस्य प्राबल्य भावात् षत्वं न स्यादिति वाच्यम् । महि सप्त च दर्शनाच्च । सृज्यद्ध्वं महिमहि सृज्यध्वं सृज्यद्ध्वं महि ।४४।

ऋकाररेफयुक्तञ्च । निश्शब्दे वा आयुश्शब्दपूर्वे वा विसर्जनीयः तकारपरे जटाकाले ऋकाररेफयुक्तमिति

षत्वं न भवतीति चेन्न षकारान्तत्वमूलत इति वचनेन पुनर्म्माहिषेयमतानुसारेणैव षत्वमेव भवति । यथा । तृतीयं निर्णिष्टृतीयं तृतीयन्निः । त्रिष्टुगायुरायुष्ट्रिष्टुक् त्रिष्टुगायुः । तस्मादायुरायुष्टस्मात्तस्मादायुः ।४५।
अन्वारभ्य । अन्यम् । अन्नम् । एषु नकारः पार्याधि पूर्वत्वमपि णत्वं न वदन्ति । अन्वारभ्य परि पर्यन्वारभ्यान्वारभ्य परि । अन्यं परिपर्यन्यमन्यं परि । अन्नं प्रप्रान्नम्मन्नं प्र ।४७।
शिक्षा च प्रातिशाख्यञ्च परस्परं विरुद्ध्यते यदि शिक्षा दुर्बलमित्याहुः सिंहस्येवम्मृगीयथेति न्यायात् ।४६।
टपूर्वस्य नकारस्य पूर्वमेव विचक्षणः । णत्वं कुर्यात्पश्चाट्टकारस्य उत्तमपर उत्तमं सवर्गीयमित्यनेन सूत्रेण णत्वं भवति यथा । नआनडानरणोन आनट् । न्यमार्डमारिर्ण न्यमार्ट् ।५३।
सूत्रेषु प्रातिशाख्यस्य सूत्रेषु अदृष्टं यत्किञ्चित्सूरान्तरबलात् भवेदिति प्रातिशाख्ये अनुक्तश्च अविरुद्धश्च अन्यतममतो ग्राह्यमित्यर्थः ।५४।
टवर्गात्परस्य लकारस्य दुश्लिष्टसंज्ञको डकारमापद्यते । लभते विड्विड्भते लभते विट् ।५५।
औत्वम् । प्र । आ । उप । अप । इत्येवं पूर्वः आरंविकारमापद्यते । यथा । ऋतुना प्रा प्रार्तुनर्त्तुना प्र । ऋजुमार्जुमृजुमा । ऋतेनार्त्तेनर्त्तेना । ऋतव्या उपोपार्त्तव्याऋतव्या उप । ऋतून । ऋतूनामवावार्तूनामृतूनामव । तु शब्दः इतरोपसर्गपूर्वत्वे आरंविकारं निवर्त्तयतीति त्वशब्दार्थः । ऋद्ध्यतेपापर्द्ध्यत ऋद्ध्यतेप ।५६।

यस्यैवार्षे । आर्षे यस्य पदान्तस्य नकारस्य स्वरपरत्वेऽपि यत्वरेफौ स्यातां तस्यैव पदान्तस्य नकारस्य अन्यस्वरपरोऽपि अनार्षे यस्य रेफौ स्यातामित्यर्थः । अथासपत्नान्स्थपत्नां अथाथासपत्नान् । नान्यथा भवेदितिकोर्थः आर्षे निमित्ते सत्यपिपौरुषे निमित्ता भावेपि स्यात् आर्षेनिमित्ता भावे पौरुषे निमित्ते सत्यपि न स्यादित्यर्थः । अथासपत्नानिन्द्राग्नी इत्यत्रानुस्वारो न भवति । अथासपत्नान्स्थपत्नानथाथासपत्नान् । आपोहविष्मान् हविष्मानाप आपो हविष्मान् ।५७।

यत्वरेफौ विनान्यत्र । षत्वणत्वादिषु अनुलोमवत्कर्त्तव्यमित्यर्थः ।५८।

तथैव मिथुनीत्यत्र जटाकाले यत्वमिष्यते । अथ मिथुनी मिथुन्यथाथ मिथुनी । मिथुन्यष्टौ च दर्शनात् ।६१।

त्रिपदप्रभृतिन्यायः लोपालोपेष्वेव एतन्न्यायः लोपालोपस्थं पदमन्ययुक्तञ्चेत्तत्र धर्मो न विद्यते पूर्वधर्मो न विद्यत इति केचित् ।६६।

एदोद्भ्यामेकारओकाराभ्यां वक्ष्यते अकारः । जटाकाले त्रिपदप्रभृतिव्यतिरिक्तपदेन युक्तं चेत्यत्र अन्यैक्यं न विद्यते ।६९।

प्रश्नानुक्रमतः त्रिपदप्रभृतिजटायां दृश्यते यदि अलोपलोपकार्यभाक् पदं च लोपकार्यभाक्पदञ्च कार्यभाक्पदस्य पूर्वमेव भवतु उत्तरमेव भवतु तत्रैव त्रिपदप्रभृति
पुनरुक्तम् । त्रिपदप्रभृतिस्थले प्रभृतीति ग्रहणस्य

पञ्चपदानि वर्त्तन्ते चेत्तत्र लोपत्रिपदप्रभृति
अलोपत्रिपदप्रभृतिश्च पञ्च पदानां न्यूरञ्चेत्त्रिपदप्रभृतिन्या
यो न विद्यते
मन्त्रब्राह्मणवाक्ये तु पञ्च पदापेक्षानि किं तु द्विपदं
वा भवतु त्रिपदं वा भवतु एकपदं वा भवतु तत्र
त्रिपदप्रभृतिन्यायः । उदाहरणानि । संपश्यामीत्यत्र
परित्वाग्न इत्येतद्वाक्यं अग्निकाण्डे प्रथमप्रश्ने ।
त्वाग्नेग्नेत्वात्वाग्ने । भूमिर्भूम्नेत्येतदनुवाके पुनरूर्जानि
वर्त्तस्वेत्येतद्वाक्यं विष्णोः क्रमो सीत्येतदनुवाके च ।
अग्न इषेषाग्नेऽग्न इषा ।
त्वं सोमतनूकृत्भ्य इत्यनुवाके अयन्नो
अग्निरित्येतद्वाक्यं यस्त्वाहृदेति याज्यायाम्
। अग्निर्वरिवो वरिवोऽग्निरग्निर्वरिवः ।
आप्यायतामित्येतदनुवाके अस्य रातीयतो
हन्ते त्येतद्वाक्यं विष्णोः क्रमो सीत्यनुवाके ।
अरातीयतो हन्ता हन्तारातीयतोऽरातीयतो हन्ता ।
भूमिर्भूम्नेत्येतदनुवाके सप्तते अग्ने इत्येतद्वाक्यम् ।
प्राचीमन्वित्यत्र यथा । ते अग्ने ग्ने ते ते अग्ने । उरुं
हिराजेत्येतदनुवाके अपो अन्वचारिषमित्येतद्वाक्यम्
। यस्त्वाहृदेत्यनुवाके । अपो अन्वन्वपोऽपो अनु ।
संपश्यामीत्येतदनुवाके अग्नेत्वन्नो अन्तम इत्येतद्वाक्यम्
अग्निर्मूर्द्धेत्यत्र यथा । नो अन्तमोऽन्तमो नो नो
अन्तमः । अगन्मसुवरित्यत्रगोमां अग्ने इत्येतद्वाक्यं
अग्निनारयिमित्यत्र यथा । गोमां अग्नेऽग्ने गोमान्
गोमां अग्ने । ये देवायज्ञहन इत्यत्र अधिरोचन
इत्येतद्वाक्यं अग्निं युनज्मीत्यत्र यथा । अन्तरिक्षं सू

र्यस्सूर्योऽन्तरिक्षमन्तरिक्षं सूर्यः । इषे त्वोपवीरित्यत्र भवतन्नस्समनसावित्येतद्वाक्यं समितमित्यत्र यथा । अद्य नो नोऽद्याद्य नः । निग्राह्या इत्यत्र द्रप्सश्च स्कन्देत्येतद्वाक्यं अभ्यस्थादित्यत्र । अनु यो योऽन्वनु यः । ध्रुवासीत्यनुवाके च । अनु यो योऽन्वनु यः । सन्त्वासिञ्चामीत्यत्र सहस्वारातीरित्येतद्वाक्यं ध्रुवा सीत्यत्र यथा । सहस्वारातीयतोरातीयतस्सहस्व सहस्वारातीयतः ।७२।

जटायामलोपप्रभृतिन्यायमाह । त्वमग्ने रुद्र इति याज्यायां अग्ने पवस्वस्वपा इत्येतद्वाक्यम् । अगन्मसुवरित्यत्र यथा । अस्मे वर्चो वर्चो अस्मे अस्मे वर्चः । उभावामित्यत्र त्वमग्ने व्रतपा इत्येतद्वाक्यं दैवीन्धियमित्यत्र यथा । त्वमग्ने अग्ने त्वं त्वमग्ने । वाग्वै देवेभ्य इत्यत्र मन्त्रब्राह्मणत्वात्तथैव भवति । यथा । उक्तान्ये वोदाहरणानि । ध्रुवासीत्यत्र यास्ते अग्न इत्येतद्वाक्यं वयोवा अग्निरित्यत्र यथा । ते अग्ने अग्ने ते ते अग्ने । सूर्ये पर इति किम् । यास्ते अग्ने समिधो यानीत्यत्र लोप एव जटाकाले । यथा । ते अग्ने ग्ने ते ते अग्ने । इमामगृभ्णन्नशनामित्यत्र द्यौस्ते पृष्ठमित्येतद्वाक्यं त्रैंशिके प्रश्नेऽपि तथैव । त्रैंशिको नाम यदेकेनेत्यादित्रयः प्रश्नाः । यो वा अयथा देवतमिति प्रश्ने यथा । अन्तरिक्षं समुद्रस्समुद्रो अन्तरिक्षमन्तरिक्षे समुद्रः । क्षत्रस्योल्बमसीत्यत्र आयुर्यज्ञेन कल्पतामित्येतद्वाक्यं । गर्भाश्रम इत्यत्र यथा । कल्पतामपानो अपानः कल्पतां कल्पतामपानः । त्वमग्नेरुद्र इति

याज्यायां आयुर्दा अग्ने इत्येतद्वाक्यं तृतीयकाण्डे तृतीयप्रश्ने यथा । आयुर्दा अग्ने अग्ने आयुर्दा आयुर्दा अग्ने । तस्मिन्ननुवाके आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमित्यत्रापि तथैव भवति । ब्राह्मणत्वात् । क्षत्रस्योल्बमसीत्यत्र वाजश्च प्रसवश्चेत्येतद्वाक्यम् । एकाचम इत्यत्र यथा । चापिजो आपिजश्च चापिजः । ध्रुवक्षितिरित्यत्र अपानम्म इत्येतद्वाक्यं इन्द्राग्नी अव्यथमानां भूयस्कृदसीत्येतदनुवाकद्वयेऽपि । यथा । अपानं मे मे अपानमपानं मे । अग्निं युनज्मीत्यत्र येना सहस्रमित्येतद्वाक्यं यदाकूतादित्यत्र । यथा । येनाग्ने अग्ने येन येनाग्ने । येनासहस्रमित्यत्र परोऽग्ने च पुनस्तथा । ऋक्षु ब्राह्मणवाक्येषु अलं द्वित्रिपदादिकमिति वचनेन परोग्न इति येनाग्ने दक्षिणा युक्ताः । येनाग्ने सुकृतः पथेति वाक्यद्वयमपि अलोप एव उच्यते । येनाग्ने अग्ने येन येनाग्ने । अग्ने सुकृतस्सुकृतोऽग्नेऽग्ने सुकृतः । अग्ने दक्षिणा दक्षिणा अग्ने अग्ने दक्षिणाः । अन्ययुक्तत्वादत्रत्रिपदन्यायो न भवति । अग्निं युनज्मीत्यत्र अस्मिन्थ्सधस्थ इत्येतद्वाक्यम् । यदाकूतादित्यत्र यथा क् । अस्मिन् थ्सधस्थे सधस्थे अस्मिन्नस्मिन् थ्सधस्थे । इमामगृभ्णन्नशनामित्यत्र आगत्यवाजीत्येतद्वाक्यं व्यृद्धं वा इत्यत्र यथा । वाज्यद्ध्वनो अद्ध्वनो वाजी वाज्यद्ध्वनः । ऐक्यं न भवतीत्यनैक्यम् । अलोप इत्यर्थः ।७४।

जटायामन्ययुक्तत्रिपदप्रभृतिन्यायमाह । अद्ध्वन आक्रम्याक्रम्याद्ध्वनोऽद्ध्वन आक्रम्य ।

भवत्यग्रेऽग्रे भवति भवत्यग्रे । अर्पयति पावकः पावकोऽर्पयत्यर्पयति पावकः । त्रिपदप्रभृति विषय इत्यर्थः । अङ्गिर इतीत्यङ्गिरोऽङ्गिर इति ।७५। अग्ने अङ्गिर इत्यत्र त्रिपदप्रभृत्यभावात् किं तु अङ्गिरो फ्सुय इति कण्ठोक्तत्वात्प्राप्तिः । अङ्गिर इतीत्यङ्गिरो अङ्गिर इति । तन्त्वा समिद्भिरङ्गिर इत्यत्र अङ्गिर इतीत्यङ्गिरो अङ्गिर इति । उख्येता अस्य सूददो हस इति वाक्यं त्रैंशिकेऽपि तथैव । अस्य सूददोहसस्सूददो हसो अस्यास्य सूददो हसः । हिरण्यगर्भस्समवर्त्तताग्र इति अमुमारण्यमनुतेदिशामीति विधेमते परम इत्यादिमन्त्रब्राह्मणभेदेन यत्र यत्र द्रष्टव्यं तत्र तत्र तथैव ।७६।

हरिः ओम् जटामणिता अपर्यं संपूर्णम्
श्रीमते हयग्रीवाय नमः
१२७

Reference:
Jaṭāmaṇi Vyākhyānam, pages 125-140 in the Ātreya Śikṣā bundle, (cod. Palmbl. III 8/133) in the collection of the Hamburg Staats-Universitaet Bibliothek, Grantha script on palm leaves, 8 folios.
Numbers represent the corresponding verses in Jaṭāmaṇi.